## १४ नवयोगीन्द्रपंचकस्तोत्रम्

जातौ मच्छेन्द्रगोरक्षौ द्वौ कविर्हरिरार्षभौ ।
अन्तरिक्षः प्रबुद्धश्च द्वौ जालन्धरकानिफौ ॥ १ ॥
चर्पटीनाथनामाभूत्पिप्पलायन आर्षभः ।
नागनाथो भर्तरी द्वौ आविर्होत्रो द्रुमीलकः ॥ २ ॥
चमसो रेवणः सिद्धः गहिनी करभाजनः ।
नवयोगीन्द्रवृन्दं हि नवनाथाः प्रकीर्तिताः ॥ ३ ॥
निवृत्तिर्गहिनीशिष्यः ज्ञानदेवो निवृत्तितः ।
ज्ञानदेवाच्च सोपानस्ततो मुक्ताभिधा मता ॥ ४ ॥
कविः कवित्वसद्दाता हरिर्बाह्यान्तरार्तिहा ।
अन्तरिक्षो मनःसाक्षी प्रबुद्धः समदर्शनः ॥ ५ ॥
पिप्पलायनः कूटस्थ आविर्होत्रो जगत्धविः ।
द्रुमिलः सर्वहृत्संस्थश्चमसः श्रौतकर्मकृत् ॥ ६ ॥
करभाजन ईशाप्तः सिद्धेशाः पान्तु नामतः ।
गुरुदेवो दत्तराजो योगी सिद्धेश्वरो गुरुः ॥ ७ ॥
वासुदेवो दत्तगुरुर्योगिसिद्धेश्वरोऽवतु ।
कलौ दीनार्ताज्ञभवबन्धमोचनहेतवे ॥
कृतावतारा योगीन्द्राः सिद्धेशाः पान्तु नः सदा ॥ ८ ॥

इति नवयोगीन्द्रपंचकस्तोत्रम्

## १५ पुण्यपत्तने मूलामुठास्तुतिः

वन्दे मूलामुठां मूलकंदात्रीं भूसुराद्धताम् ।
वृन्दारकैर्वृन्दवनैर्भूधरैः परिशोभिताम् ॥ १ ॥

श्रीकृष्णासंगता भीमा भीमया संगता सरित् ।
मूलामुठा नदीनां सा बलाबलविवर्जिता ॥ २ ॥
दृष्टा स्पृष्टा पीता स्नाता सर्वान् समूलफलदात्री ।
धात्री सर्वजनानामार्तिहरा हरिहरात्मिका मूर्तिः ॥ ३ ॥
मूलसन्मणिसन्मुक्तसुवर्णवरवर्णिनी ।
सूरिसूरे सर्वरसे वेदवित्प्रवरे नमः ॥ ४ ॥

इति मूलामुठास्तोत्रम्

## १६ आळंदीस्तोत्रम्

वन्दे निवृत्तिनाथं श्रीज्ञानानन्दनिधिं शिवम् ।
प्रत्यक्परब्रम्हवृत्तिलयकर्तस्त्वमेव मे ॥ १ ॥
वन्दे ज्ञानेश्वरं ज्ञानदातॄणां प्रवरं वरम् ।
याचे ज्ञानेश्वरीं हार्दां सच्चित्सुखनिधिद्रुमम् ॥ २ ॥
वन्दे निवृत्तिज्ञानेशपदसोपानपंक्तिदम् ।
मन्दाज्ञालसबुद्धीनां सोपानं सुमतिप्रदम् ॥ ३ ॥
वन्दे मुक्तां मुक्तजनाल्हादिनीं गुरुमोददाम् ।
वन्दे सिद्धेश्वरं लिंगमिन्द्राणीसहितं सदा ॥ ४ ॥

## १७ तुकारामार्या

देहिन् देहौ देहान् देहि त्यज भज भवं तुकारामम् ।
मुक्तासुखात्मारामभङ्गवाणीततं तुकारामम् ॥ १ ॥
उत्तमभद्रपदाख्येऽद्वितीयमुख्यान्तसूरिमध्यस्थे ।
वैकुण्ठपीठहृन्मणिसन्मणिमणिमापदं तुकं वन्दे ॥ २ ॥

त्यजारामं त्यजारामां भज रामं रमावरम् ।
तुकारामं तुकारामं तुकारामं सदा भज ॥ ३ ॥
परा वाणी तुकावाणी वाणीजातिस्तु का कथा ।
वाणीवाणी वेदवाणी साऽभंगा या तुकाहृता ॥ ४ ॥

## १८ देवीस्तोत्रम्

वन्देहं प्रत्यगमृताब्धिनिवासिनि ते सदा ।
सदाराः सत्पथाचाराः सत्सुखाः पारदर्शिनः ॥ १ ॥
संस्थितास्ते देवि पदे संलग्नाः सम्पदाश्रयात् ।
त्वदधीनजगत्पाता सृष्टिसौन्दर्यनायके ॥ २ ॥
केपि ते पदसंलग्ना भूसुराः खेचराः सुराः ।
सर्वत्रणाक्षरा नित्या संपत्प्राप्तपदाब्धिकाः ।
सुविचाराऽगविचारा धीविचारपरात्पराः ।
सन्दृश्यतेऽदृश्यपदकांक्षिणः सत्पथारुहाः ॥ ४ ॥
निधिपास्तेनुगा देवा सुरसम्पत्सुपादपाः ।
चतुष्पदातिसंलग्ना ज्योतिर्धूमातिमार्गगाः ॥ ५ ॥
प्रसादात्ते भगवति देवि मातर्नमोऽस्तु ते ।
सप्ताब्धिभूषणे सप्तलोकसंपत्प्रदे मुदे ॥ ६ ॥
मुदमर्पय मे श्रैष्ठ्यं ज्यैष्ठ्यं ते सततं नमः ।
नमः पुरस्तादथ पृष्ठतस्ते नमोस्तु ते सर्वत एव सर्वे ॥७॥
नमो हिरण्यगर्भे तेऽक्षरे ज्ञानस्वरूपिणि ।
सच्चित्सुखाब्धिनिलयेऽनन्तब्रम्हाण्डनायिके ॥ ८ ॥

इति देवीस्तोत्रं संपूर्णम्

## १९ श्रीव्यासपूजास्तोत्रम्

नमामि भगवन्तं तं पूर्णब्रम्ह सनातनम्
श्रीकृष्णं वासुदेवं च वन्दे संकर्षणं नुमः ।
प्रद्युम्नमनिरुद्धं च वन्दे श्रीकृष्णपंचकम् ॥ १ ॥
वन्दे व्यासगुरुं वन्दे श्रीवैशम्पायनं नुमः ।
सुमंतुं जैमिनिं पैलं वन्दे श्रीव्यासपंचकम् ॥ २ ॥
वन्दे श्रीशंकराचार्यं विश्वरूपधरं नुमः ।
पद्मपादाचार्यहस्तामलकौ तोटकं नुमः ॥ ३ ॥
सनकाय नमो वन्दे सनन्दनसनातनौ ।
वन्दे सनत्कुमाराय कपिलाय नमो नमः ॥ ४ ॥
वन्देहमृषभं देवं दत्तात्रेयं गुरुं नुमः ।
वन्दे शुकं नारदं च वन्दे संवर्तनं नुमः ॥ ५ ॥
नमामि श्वेतकेतुं च वन्दे दुर्वासस नुमः ।
जडभरतं रैवतं च वामदेवं नमाम्यहम् ॥ ६ ॥
वन्दे श्रीद्रविडाचार्यान् पूज्यपादाभिवन्दितान् ।
गोविन्दभगवत्पूज्यपादाचार्यान्नमाम्यहम् ॥
गौडपादाचार्ययतीन्नमामि च मुदाप्लुतान् ।
वन्दे विवरणाचार्यान् ब्रम्हविद्याप्रवर्तकान् ॥
आचार्यान् सततं वन्दे ब्रम्हविद्याप्रदान् मुदा ॥ ७ ॥
नमो गुरुभ्यः परमगुरुभ्यश्च नमो नमः ।
परमेष्ठिगुरुभ्योहं परात्परगुरून्नुमः ॥
समस्तब्रम्हविद्यासम्प्रदायिभ्यो नमो नमः ॥ ८ ॥

नम आत्मने नमश्चान्तरात्मने परमात्मने ।
नमः सर्वात्मने परब्रम्हणे च नमो नमः ॥ ९ ॥
श्रीव्यासपीठनिहितान् देवान् वन्दे मुदा सदा ।
अनुगृण्हन्तु मे पूजां कृपां कृत्वा ममोपरि ॥११॥

इति श्रीव्यासपूजास्तोत्रं संपूर्णम्
श्रीकृष्णव्यासाचार्यादिगुरुपदकमलार्पणमस्तु

## २८ श्रीमद्भगवत्पूज्यपादस्तोत्रम्

वन्दे श्रीभगवत्पूज्यपादमाचार्यशंकरम् ।
वेदमार्गस्थापनार्थमाविरासीत्स्वयं शिवः ॥ १ ॥
भूत्वाष्टमेब्दे संन्यासी गोविन्दभगवद्गुरोः ।
नष्टसंन्यासमार्गं च तेने वन्दे जगद्गुरुम् ॥ २ ॥
चतुर्दिक्षु चतुःपीठे चतुश्छात्राश्च स्थापिताः ।
सुरेश्वरः पद्मपादहस्तामलकतोटकाः ॥
आचार्यवर्यान्नो वन्दे ब्रम्हविद्याप्रवर्तकान् ॥ ३ ॥
वेदान्तोपनिषद्भाष्यं येन शारीरकं कृतम् ।
गीताभाष्यं द्वैतमतखण्डनं तं नमाम्यहम् ॥ ४ ॥
मन्दप्रज्ञानबोधकराः सुलभा ग्रन्थसंचयाः ।
कृता येनाज्ञानजनोत्धारार्थं तं नमाम्यहम् ॥ ५ ॥
वेदान्तभक्तिसंपूर्णाः पूर्णानन्दपदप्रदाः ।
विवेकचूडामण्याद्याः कृतास्तं सततं नुमः ॥ ६ ॥
अद्वैतब्रम्हसद्धर्मं चात्यन्तसुदृढीकृतम् ।
येन तं सततं वन्दे सशिष्यं भक्तिपूर्वकम् ॥ ७ ॥

द्वात्रिंशदब्दे भगवान् कैलासमगमद्धरः ।
श्रीमच्छंकरमाचार्यं वन्दे छात्रपरम्पराम ॥ ८ ॥
श्रीसाम्बशिवगुर्वाद्यां शंकराचार्यमध्यगाम् ।
अस्मदाचार्यपर्यंतां वन्दे गुरुपरम्पराम् ॥ ९ ॥
श्रीमद्भगवत्पूज्यपादस्तोत्रं च प्रपठेत्सुधीः ।
तं चामृतं पदं देयाद् गुरुः श्रीशकरार्यवित् ॥१०॥

## २१ श्रीवेदव्यासस्तोत्रम्

वन्दे श्रीवेदवेत्तारं श्रीव्यासं श्रीगुरुं परम् ।
चतुर्वेदविभेत्तारं साक्षान्नारायणं हरिम् ॥ १ ॥
वेदोदधिशिरोरत्नमणिभूषणसूत्रकृत् ।
अज्ञानहृदयग्रन्थिनाशार्थमवतारधृक् ॥ २ ॥
अष्टादशपुराणानां कर्ता तं सततं नुमः ।
भारतं पंचमं वेदं मोक्षसोपानमद्भुतम ॥ ३ ॥
उत्तमं रचयामास तं वन्दे बादरायणम् ।
छात्रेभ्य ऋग्यजुःसामाथर्वाणः कथिताः पृथक् ॥
पैलवैशम्पायनसज्जैमिनये च सुमन्तवे ॥ ४ ॥
नमः सशिष्यगुरवे व्यासाय च शुकाय च ।
भूयो भूयो नमस्तस्मै सद्बुद्धिप्रेरकाय च ॥ ५ ॥
संसारार्णवमग्नं मां प्रोद्धराशु गुरोर्गुरो ।
याचे त्वत्पादकमले दृढा भक्तिः सदास्तु मे ॥ ६ ॥
सर्वसाक्षिन् सर्वगुरो भक्तवत्सल ते नमः ।
कृष्णद्वैपायन हरेरवताराशु तारय ॥ ७ ॥

ससूतशुकसच्छात्रगुरवे भूरवे सदा ।
नमस्ते भगवन् वेदव्यास सच्चित्सुखाब्धये ॥ ८ ॥

इति वेदव्यासस्तोत्रं संपूर्णम्

## २२ अनसूयास्तोत्रम्

वन्देहमनसूये त्वामत्रिप्रियहितैषिणि ।
सृष्टिस्थितिलयेशानजननि त्वत्पदे नमः ॥ १ ॥
असूयासुरवृत्तीर्मे नाशयाशु नमोस्तु ते ।
अनसूयादेवसम्पत्प्रदानेश्वरि ते नमः ॥ २ ॥
तव दर्शनकांक्षा मे भक्तपूर्णमनोरथे ।
पूरिता पूर्णकरुणासागरे सारदर्शने ॥ ३ ॥
माता त्वमेव मे भावं शोधयाशु विवेकिनि ।
सन्मार्गं दर्शय सदा मनोनिग्रहपूर्वकम् ॥ ४ ॥
श्रीसद्गुरुं दत्तदेवं दर्शयाद्य त्रिरूपिणम् ।
याचे वरं वरेशानि मातस्त्वं परिपूरय ॥ ५ ॥
सावित्रिगिरिजापद्माशक्तित्रयस्तुतेश्वरि ।
प्रसन्ना भव भो मातस्तारयाशु भवार्णवात् ॥ ६ ॥
अनसूयास्तोत्रमिदमनसूयात्रिजप्रियम् ।
पठनाच्छ्रवणात्सद्यो देयान्मोक्षसुखं सदा ॥ ७ ॥

## २३ नर्मदास्तोत्रम्

वन्देहं नर्मदां सर्वशर्मदां सर्वशिवात्मजाम् ।
देवर्षिगणसत्सेव्यामत्रिपुत्रप्रियंकरीम् ॥ १ ॥

पितामहमहादेवशेषशायीविभूषणः ।
पादो यस्य तु तं वन्दे भृगुक्षेत्रविभूषणम् ॥ २ ॥
पदानि त्रीणि यस्यां हि दुर्लभानि सुखानि च ।
ओंकारं भृगुक्षेत्रं च रेवोर्योः संगमं नुमः ॥ ३ ॥
सुलक्षणविचित्राणि चित्रवर्णाकृतीनि च ।
यत्र लिंगानि गाणेशाः संजातास्तां नमाम्यहम् ॥ ४ ॥
गांगं पुनाति सततं ददाति सततं पदम् ।
रेवादर्शनमात्रेण तत्पदं सततं नुमः ॥ ५ ॥
श्रीरेवे वरदे देवि दुरिताग्निसुधारसे ।
रसं प्रदेहि च धियां निधेहि सततं ततम् ॥ ६ ॥
श्रद्धाभक्तिस्वात्मसुखं याचे रागविवर्जितम् ।
मातस्तेहं बाल इति मत्वा चोद्धर ते नमः ॥ ७ ॥
संसारार्णवमग्नं मां भीतं च परिपालय ।
सुखदे मोक्षदे देवि पदे दिव्ये प्रदर्शय ॥ ८ ॥
चिद्रश्मिभिर्दीव्यतेऽसौ यतिसम्राट् सुधीश्वरः ।
भूषितं गारुडं क्षेत्रं भूषणाढ्या सुनर्मदा ॥
सेविता च सदा येन ततं तं त्वां नमाम्यहम् ॥ ९ ॥

इति नर्मदास्तोत्रम्

## २४ अमरेश्वरस्तोत्रम्

नमामि देवदेवेशं श्रीकृष्णातटवासिनम् ।
अमराख्यपुरे देवदेववृन्दसुसेवितम् ॥ १ ॥

वन्देहं गोरुद्रपितृशुक्लतीर्थविभूषणम् ।
स्नात्वा पूजनतस्तत्तल्लोकदं चामरेश्वरम ॥ २ ॥
अमराद्यष्टतीर्थानि यदग्रे शंमयानि तम् ।
वन्दे दत्तश्रीनृसिंहयतिराजसुपूजितम् ॥ ३ ॥
कृष्णावेणीपञ्चगङ्गासंगमाग्र्यविभूषितम् ।
साक्षात्परब्रम्हरूपं वन्देहं चामरेश्वरम् ॥ ४ ॥
यत्तीर्थस्नानपूजातः देवत्वं प्राप्यतेब्दतः ।
वन्दे तं योगिनीवृन्दसुसेवितपदं सदा ॥ ५ ॥
नारदादियोगिवृन्दसनकादिसुपूजितम् ।
नमामि तं चामरेशं भूवैकुण्ठपदप्रदम् ॥ ६ ॥
अमरेश्वर भो देव कृपापात्रं हि मां कुरु ।
करुणाब्धे सुखाब्धे मां हृत्सुखं हि प्रदेहि भो ॥ ७ ॥
वरं वरदराड्दत्तपादं हृद्भूषणं कुरु ।
सर्वानन्दप्रदं तं त्वां नमामि सततं सदा ॥ ८ ॥
अमरेश्वरस्तोत्रमिदं शीघ्रमुक्तिप्रदं नृणाम् ।
पुनातु सर्वदुरिताच्चामरेश्वरतुष्टिदम् ॥ ९ ॥

## २५ नामदेवस्तोत्रम्

योनिसम्भवो नामदेवो देवप्रियोत्तमः ।
यद्भक्तिप्रीतिवशगो वैकुण्ठाधीशविठ्ठलः ॥ १ ॥
यच्छुक्तिजन्म मुक्तांना स्वातिरिक्तं न चान्यथा ।
तथैव मुक्तभक्तांना स्वातिरिक्तं न चान्यथा ॥ २ ।

नामदेवस्य सम्प्रीत्यै वापी पूर्णोदका कृता ।
पीतं येन पयः साक्षाद्भक्तभक्तिप्रियं नुमः ॥ ३ ॥
यत्प्रीतिकीर्तनवशाज्जातः प्रत्यङ्मुखो हरः ।
अभंगानां कोटिशतं रचितं येन तं नुमः ॥ ४ ॥
छिन्नहस्तो भक्तवरः कुलालो यस्य कीर्तने ।
भगवन्नामघोषेण हस्तौ पल्लवतां गतौ ॥ ५ ॥
राजदण्डभयत्रस्ता बालवृद्धनरस्त्रियः ।
मृतगोसंजीवनेन ह्यानन्दाब्धौ निपातिताः ॥ ६ ॥
नामदेवस्य माहात्म्यं वर्णितुं नैव शक्यते ।
श्रीज्ञानदेवप्रमुखभक्तवृन्दनुतस्तुतः ॥ ७ ॥
यस्य दासी जनिर्भक्तोत्तमा तद्गृहसंस्थितः ।
दलनादिककृत्यानि चाकरोद्भगवान् हरिः ॥ ८ ॥

स्वात्मस्वरूपं हि गुरोः प्रसादात् ।
सन्दृश्यते सर्वगुहास्थितं स्वयम् ॥
इत्थं जनान् बोधयितुं स्वयं हरिः ।
श्रीनामदेवो वृतवान् स्वयं गुरुम् ॥ ९ ॥

## २६ श्रीवेदगङ्गास्तोत्रम्

नमामि वेदगङ्गे त्वां सततं ते पदं सदा ।
दर्शयाशु स्वरूपं ते सर्वलोकसुसेवितम् ॥ १ ॥
वन्दे श्रीभगवत्पादमुखपद्मविनिर्गते ।
सुखदे मोक्षदे देवि रूपद्वयमलौकिकम् ॥ २ ॥

तव नाम च रूपं च हृदि वाचि सदास्तु मे ।
शरीरवाङ्मनो मेद्य पवित्रं कुरु चिद्रसे ।। ३ ।

श्रीविष्णुपदवक्त्राब्जसम्भूते भूतविग्रहे ।
त्रैलोक्यजननी देवि वन्दे वेदाङ्गसुन्दरि ।। ४ ।।

चतुर्वेदसमुद्भूते चतुर्देहान् विनाशय ।
तव भावं च भक्तिं च देह्यानन्दप्रदे मुदे ।। ५ ।।

## २७ भिवापुरस्थश्रीसोमेश्वरस्तोत्रम्

वन्दे सोमेश्वरं सोमं सोमगङ्गाविभूषणम् ।
सिद्धसाध्यादिदेवर्षिसेवितं हरमव्ययम् ।। १ ।।

वन्दे श्रीमातरं देवीं जगदम्बां दयानिधिम् ।
सृष्टिस्थितिलयानां या हेतुभूता मुनिस्तुता ।। २ ।।

मरुत्काशीनदीतीरवासी साम्बः सुरेश्वरः ।
धीशोमेशो जन्ममृत्यू मृडो मे हरतु प्रभुः ।। ३ ।।

फणीन्द्रकण्ठाभरणं नागयज्ञोपवीतिनम् ।
कैलासशिखरस्थानं वन्दे सोमेश्वरं विभुम् ।। ४ ।।

ज्ञानदाता मोक्षदाता भक्तिदाता परेश्वरः ।
विभूतिभूषिततनुर्भक्ताभयवरप्रदः ।। ५ ।।

श्वेतचन्दनलिप्तांगो बिल्वाक्षतजटाधरः ।
कर्पूरगौरः पंचास्यो भालनेत्रो दयानिधिः ।। ६ ।।

गणेशगिरिजास्कंदयुक्तः सुन्दरविग्रहः ।
डमरूत्रिशूलशंखादिनादोत्पातितशास्त्रदृक् ।। ७ ।।

बाणरावणनन्दीशा यस्य भक्ताः स नोऽवतु ।
मदनारे मनो मे त्वत्पादाब्जे निवसत्विदम् ॥ ८ ॥
यत्र सोमेश्वरो देवो यत्रोमा जगदम्बिका ।
यत्र काशी मरुद्गंगा मोक्षश्रीः सुलभा सदा ॥ ९ ॥

## २८ श्रीमरुद्गंगाकाशीस्तोत्रम्

नमामि श्रीमरुद्गंगे श्रीकाशीसंयुते सरित् ।
युवयोः संगमस्नानं श्रीगौरीशपदप्रदम् ॥ १ ॥
तव नाम मरुद्गंगे गीतं येन स मोक्षभाक् ।
क्षिप्रं भवति धर्मात्मा पापी स्नानात्प्रमुच्यते ॥ २ ॥
मरुद्देवस्य तपसः संजाता या मरुन्नदी ।
काशीनदी सत्प्रकाशी मरुत्संगा सुखप्रदा ॥ ३ ॥
यत्स्नानजं फलं ब्रम्हरन्ध्रभेदिसमं नृणाम् ।
क्रममुक्तिप्रदं ते च मरुत्काशीजलं नुमः ॥ ४ ॥
मरुद्वृधे वेदगेये हतापाये सरिद्वरे ।
वरेण्यपदमात्मस्थं सुखमर्पय ते नमः ॥ ५ ॥
यद्गुर्वीश्वरतोषेण लभ्यं हृदि सुखास्पदम् ।
तच्चापि हृत्प्रकाशे त्वं प्रकाशय नते मयि ॥ ६ ॥
तद्भीमापुरमेतद्वै धर्मपार्थपुरान्वितम् ।
नकूलसहदेवान्नपूर्णापुरसुवेष्टितम् ॥ ७ ॥
मरुत्काशी महाप्राणे जगदम्बे शिवप्रिये ।
भो सोमेश्वर सद्भक्तप्रियपादं नमामि ते ॥ ८ ॥

## २९ श्रीरामटेकस्थरामस्तोत्रम्

वन्दे सीतां रामचन्द्रं लक्ष्मणं चांजनीसुतम् ।
कूटस्थं मुनिदेवर्षिवंदितं सिद्धसेवितम् ॥ १ ॥
विश्वेशदर्शनद्वारं मुक्तिदं चित्तशोधनम् ।
योगिध्येयं भक्तिगम्यं श्यामसुन्दरविग्रहम ॥ २ ॥
वसिष्ठकौशिकगुरुं वन्दे सर्वगुरुं सदा ।
आदिनाथं रमानाथमनाथं भक्तवत्सलम् ॥ ३ ॥
भुक्तिदं मुक्तिदं यस्य नाम पापौघनाशनम् ।
शिवशान्तिकरं तत्ते नाम मे वदने सदा ॥ ४ ॥
रूपं दृग्गोचरं तेस्तु हृदि ते पादपंकजम् ।
सर्वत्र सगुणं रूपं निर्गुणं च प्रदर्शय ॥ ५ ॥
नारायण दयापूर्ण हृदयज्ञानसागर ।
भवभीतं भवहर मां प्रोध्दर सुखप्रद ॥ ६ ॥
रामकूटस्थरामस्य तीर्थमम्बाभिधानकम् ।
पावनं सर्वजीवानां भक्तिदं तन्नमाम्यहम् ॥ ७ ॥

## ३० श्रीरामदासस्तोत्रम्

नवभक्तिरसापूर्णः करुणाकरबोधदः ।
दासबोधः कृतो येन रामदासाय ते नमः ॥ १ ॥
श्रीरामजयरामेति पुनर्जय जयेति च ।
राम राम महामन्त्रः संसारार्णवतारकः ॥ २ ॥
कोटित्रयोदशजपं कृत्वा भक्तिरसं लभेत् ।
रमन्ति योगिनो यस्मिन् सच्चिदानन्दरूपिणि ॥ ३ ॥

निर्गुणं ब्रम्ह रामश्च श्रीयुतः सगुणोऽभवत् ।
रामो दाशरथिः श्रीमान् नररूपधरः परः ॥ ४ ॥
सीतारामो जयति यो जयति स्वेष्टकामधुक् ।

ज्ञाने वसिष्ठः शुकयोगिराजो विरागतायां कवित्रालिमको यः ।
कवीश्वरो भक्तिमतो वरिष्ठः श्रीरामदासः कृतिरामदासः ॥ ५ ॥

व्यासो हि वक्ता मुनिरेव साक्षाद्दयाकरः शान्तिकरः क्षमाढ्यः ।
निधिर्गुणानां च सतां शरण्यः शशीव मातेव रसेव सागरः ॥ ६ ॥

आजानुबाहुर्धृतपादुकः करे सुयोगीश्वरयोगदण्डः ।
कौपीनधृक् चन्दनमुद्रिताङ्गो जटाधरः शंकरविष्णुरूपः ॥ ७ ॥

यज्ञोपवीतं शशितुल्यमास्यं फुल्लारविन्दे नयने च यस्य ।
कृपाकटाक्षेण जगत्पुनीतं कृतं कृतीनं प्रणतोस्मि नित्यम् ॥ ८ ॥

काषायवस्त्रं कटिकौपिनं तं स्कन्धे च भिक्षानिधिकामधेनुम् ।
मुखे च नामामृतरामनाम एनं भज त्वं हरिरामदासम् ॥ ९ ॥

भाले सुचिन्हं शशिमौलिलिंगं शैवोत्तमं सूचितरामलिंगम् ।
प्रत्यक् च तत्त्वं हृदि मूर्ध्नि संस्थितं ध्यानात्धि चाप्यं गुरुमंत्रलिंगम् ॥ १० ॥

श्रीदासबोधो नवभक्तिसारसारो रसो मुक्तिपदां निदानम् ।
सच्चित्स्वरूपं प्रकरोति शीघ्रं भजस्व तंनु तमु मुक्तिकाम ॥ ११ ॥

श्रीरामदूतहनुमत्प्रतिमाप्रतिष्ठां च सर्वत्र हि भूमिमण्डले ।
श्रीरामभक्तिः प्रसृता हि लोके यया जनोऽज्ञोपि भवेद्विमुक्तः ॥ १२ ॥

श्रीरामनामामृतसारमेतत्पीत्वा वितृष्णो भवति प्रबुद्धः ।
प्रबुद्धवाल्मीकऋषिर्हि जातो यथावदत्सोपि तथाचरत्सः ॥ १३ ॥

ज्ञानानन्दनिधिं भजत्सुखकरं श्रीरामदासं सदा
श्रद्धाभक्तियुतो भजस्व सततं श्रीरामदासं सदा ।
यं कामं मनसीच्छसि त्वमनिशं पूर्णं जगत्कारणम्
तं कामं भज रामनाम भजनात्प्राप्तं पदं शाश्वतम् ॥१४॥

गोब्राम्हणानां प्रतिपालनं कृतं कृतं च भूभारजनासुराणाम् ।
सर्वात्मदानं हि कृतं च तेन शरीरवाङ्मानसतापसेन ॥१५॥

क्षात्रधर्मं बोधयित्वा शिवाय परिपालने ।
ब्रम्हक्षात्रौ रक्षितौ द्वौ धर्मौ जगति पालने ॥१६॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥१७॥

अवतारकृतं कार्यं भक्तिसन्मार्गबोधदम् ।
माघे कृष्णे नवम्यां हि पूर्णब्रह्म सनातनम् ॥१८॥

निर्विकल्पे स्थितिं कृत्वा स्थितप्रज्ञस्तदाभवत् ।
स्वस्वरूपेण जागर्ति रामदासः सतां हृदि ॥१९॥

## रामदासपंचायतनम्

स्वामी श्रीरामदासः सकलगुणनिधिः केशवस्वामिराजो
योगीशो रंगनाथः सकलगुणकलायोगिराजो वदान्यः ।
धीशो यो जयराम एष समदृग् ह्यानन्दमूर्तिस्तथा
एते पंच हि पंचदेवविभवस्त्वानन्ददाः स्वेष्टदाः ॥२०॥

गजयुगगजभू ( १८४८ ) शाके माघे कृष्णे भृगोर्दिने ।
नवम्यां श्रीरामदासचरितं चोद्गत हृदः ॥२१॥

काश्यां गंगातीर ईशगुरुराजकृपावशात् ।
अर्पितं तत्पादयुग्मे प्रीयतां गुरुरामराट् ॥२२॥

## ३१ चीमूरस्थकेशवदेवेश्वरस्तोत्रपंचकम्

कमला यस्य पादाब्जे शंखचक्रगदाब्जयुक् ।
सर्वानन्दास्पदमुखा केशवं तं नमाम्यहम् ॥ १ ॥
कमीशं योऽवति सदा हृन्नाभिकमले हरिः ।
तस्माद्धि केशवं वन्दे काजेशं त्रिगुणेश्वरम् ॥ २ ॥
फणीन्द्रछत्रं देवाजीवाजीण्नागेशमन्त्रिणम् ।
स्वप्ने स्वं दर्शितं रूपं केशवं तं नमाम्यहम् ॥ ३ ॥
माघे कृष्णे प्रातिपदि ह्युत्सवोस्ति महाधनः ।
श्रीगुरोः केशवस्यापि पंचम्यन्तोऽतिशोभनः ॥ ४ ॥
राजराजेश्वरो यस्य सुवर्णधननायकः ।
यदर्चकोस्ति कमलावारस्तं केशवं नुमः ॥ ५ ॥

## ३२ श्रीकेशवस्तोत्रम्

सृष्टिस्थितिलयाधारं जगतामीश्वरं हरिम् ।
लक्ष्मीनाथं चादिनाथमनाथं केशवं नुमः ॥ १ ॥
पद्मनाभं नीरदाभं प्रियभक्तातिवत्सलम् ।
नारायणं स्वयंभूतमनाथं केशवं नुमः ॥ २ ॥
राजोपचारपूजाभिः पूजितं सिद्धसेवितम् ।
सनन्दनादिभक्तेष्टपूरकं केशवं नुमः ॥ ३ ॥

यदग्रे कमलाढ्यं हि तीर्थराजसरोवरम् ।
सर्वपापहरं पुण्यालयं तं केशवं नुमः ॥ ४ ॥

अम्बरीषप्रभावेण शापसम्बन्धकारणात् ।
दुर्वाससो योवतरत्केशवं तं नमाम्यहम् ॥ ५ ॥

क ईशोजो विष्णुरिति त्रिगुणात्मात्रिनन्दनः ।
दत्तात्रेयः स एवायं केशवं तं नमाम्यहम् ॥ ६ ॥

चिन्मूलं रक्षति सदा चात्मदानेन यो हृदि ।
ददाति भक्तवृन्दानां केशवं तं नमाम्यहम् ॥ ७ ॥

चिदा मूलाज्ञानहरं स्वरूपानन्दबोधदम् ।
चिमूरस्थं केशवं तं नृसिंहेशगुरुं नुमः ॥ ८ ॥

## ३३ एकनाथस्तोत्रम्

आदिदेवनाथगुरुजनार्दनगुरुं परम् ।
वन्देऽहमेकनाथं तमनाथकरुणाघनम् ॥ १ ॥

चतुर्बाहुं च षड्बाहुं द्विबाहुमपरं गुरुम् ।
भजतं नित्यमेकं तमेकनाथपदं नुमः ॥ २ ॥

षट्कर्ता षड्विहीनो यः षड्गुणैश्वर्यकिंकरः ।
किंकरः शंकरपदत्रिपाद्भक्तः सुहृत्तमः ॥ ३ ॥

तमो हार्दतमोहर्ताऽवतारश्चैकनाथ इत् ।
स्वर्गस्थाः पितरो येन भोजितास्तं मुदा नुमः ॥ ४ ॥

एकादशद्वाररक्षाकर्ता दत्तो य एक ईट् ।
एकनाथः स एवायं सहस्रद्विजभुक् स्वयम् ॥ ५ ॥

श्रीज्ञानदेवप्रसादाल्लब्धा ज्ञानेश्वरीष्टदा ।
ज्ञाननिधिं कृष्णगुरुं चैकनाथमहं भजे ।। ६ ।।
पूर्णानन्दानन्दजनुर्गोकुले सर्वगोकुलः ।
गोपिकारमणो देव एकनाथगुरुस्त्वयम् ।। ७ ।।
सर्वत्र भगवानेकः समदृग् विचचार गाम् ।
देवार्थं गांगमानीतं तृषार्ते खेचरेऽर्पितम् ।। ८ ।।
किं वर्ण्यतेस्य महिमा तुकारामादिसंस्तुतः ।
गुरुदेवात्मैकभावं गतं तं किं वदाम्यहम् ।। ९ ।।

## ३४ अमोघानदीस्तोत्रम्

नमाम्यमोघफलदामामामामां सरिद्वराम् ।
वन्द्याममोघजलदां वांजूटीनामिकां तथा ।। १ ।।
संगमश्चोत्तराशां हि वाहिनी सुखदायिनी ।
मातरौ महिमा नो वां तारतम्यविवर्जितः ।। २ ।।
कार्तिकेयसमापूर्णां माता मोहविनाशिनीम् ।
उमां श्रीशंकरारामां वन्दे लक्ष्मीपतिप्रियाम् ।। ३ ।।
वन्देहमामामुमां च सोमां सोमप्रियां नदीम् ।
त्रिवेणीसंगताः सत्य आत्मदर्शनदानदाः ।। ४ ।।
अत्रिप्रियेव सुखदा मोक्षदातिप्रिया हि नः ।
किं वर्ण्यतेत्राल्पमतिर्वाङ्मनोविषयातिगाः ।। ५ ।।
प्रणवादर्शरूपा या तां वन्दे मनसा गिरा ।
कार्तिकामां सोमयुतां स्नानार्थं मम संगताम् ।। ६ ।।

ममत्वादिदोषहरां वन्दे हरिहरात्मिकाम् ।
किं मया प्रार्थ्यते सर्वहृत्स्थां सच्चित्सुखात्मिकाम् ॥ ७ ॥
सर्वा पूर्णा च करुणा शेषहृत्स्था शिवप्रिया ।
हरितालिकां सरित्सेव्यां पार्वत्या सहितां नुमः ॥ ८ ॥
इदं स्तोत्रं सत्कवित्वदातृ सन्मानसप्रियम् ।
अर्पितं च मया प्रीत्या सर्वहृत्स्थहरेःपदे ॥ ९ ॥

## ३५ यमुनास्तोत्रम्

वन्दे श्रीयमुनापंचगङ्गासङ्गममुत्तमम् ।
प्रयागत्रयसद्धर्मं तुरीयानन्ददायकम् ॥ १ ॥
नमामि पंचगगे त्वां यमुने गोकुलप्रिये ।
श्रीकृष्णामृतफलदे दत्तात्रेयसुहृन्मुदे ॥ २ ॥
शिवा भद्रा भोगावती कुंभी ख्याता सरस्वती ।
यमुना कृष्णा च वेणीयुक् मोक्षदाता नमाम्यहम् ॥ ३ ॥
प्रयागराजराज त्वं वैराडानंददायकः ।
श्रीरामदूतहनुमत्सेवितं ते तटं सदा ॥ ४ ॥
तस्मात्ते स्नानजं पुण्यं को वेत्ति भगवान् स्वयम् ।
मकरे माकरे मीने मुदे मेघरुचौ परे ॥ ५ ॥

## ३६ आरती गणपतीची

जयदेव जयदेव गणपति गजवदना। मंगलमूर्ते आरति तव संतत सदना ॥ ध्रु० ॥ विश्वाधारा पार्वतितनया विघ्नहरा। हारा लंबोदर हरमोदक मोदकरा। अखिलसुरार्चितदेवा अर्पितसर्ववरा। विद्यानिधि धनदाता पालय मा सुकरा ॥ १ ॥ सृष्टिस्थितिपाता त्वं

पूर्णब्रम्ह त्वं । शशिभालः सुरपालो मूषकवाहस्त्वं। गिरिजानंदा ब्रह्मानंदा मोदस्त्वं । सत्धर्ममार्गदाता वदान्यदाता त्वं ॥ २ ॥ प्रणवातीता प्रणवाकारा भो सुमुखा । एकोनेको रूपो रूपस्त्वं प्रमुखः । सुखधामनाम सुखकर सुरगुरुवरलेखः । अस्मान् रक्षतु विघ्नादुरिताच्चित्पालः ॥ ३ ॥ सिंदुरचर्चितगात्रो दुर्वांकुरभालः । प्रियरक्तगंधपुष्पो मंदारसुमालः । वरदाभयपाशांकुशधृतकर सुरपालः । करुणासागर दरहर नृसिंहयतिलेखः ॥ ४ ॥

## ३७ आरती विश्वेश्वराची

जय शंभो शशिशेखर विश्वेश्वर देवा । नीराजयामि ते हर सज्जनहृच्छर्वा ॥धृ०॥ शिव गौरीवर वंदितसंस्तुतपूज्यपद । श्रीशंकर गंगाधर फणिभूषण सुखद । परशूधर मृगवासा हिमनगवरसुखद । मुदमर्पय मयि करुणासागर गुरुवरद ॥ १ ॥ यन्निकटेऽन्नसुपूर्णा जगदंबा माता । विघ्नेश्वर ढुंढीश्वर विद्यासुखदाता । श्रीदंडपाणि भैरव गुरु काशीपाता । पाता जगतां नोऽव्यादुमाधव भवहर्ता ॥ २ ॥ श्रीगंगाधरसुखदासुखदाखिलधात्री । श्रीकाशीहृत्काशी मोक्षपुरी शास्ती । यत्र श्रीमोक्षगुहा सत्फलफलदास्ति । विश्वेशं नौमि सदा नृसिंहयतिसूक्तिम् ॥ ३ ॥

## ३८ आरती शंभूमहादेवाची

( शिखर शिंगणापूर )

जयदेव जयदेव जय श्रीमांगीशं । हरिहररूपं वन्दे श्रीधर गौरीशं ॥ धृ० ॥ गंगापद गंगाधर शशिधर सुखदेवं । श्रीगौरीहृदयांगं विश्वेश्वरदेवं । नगभूषण नगवासं नगधर नगदेवं । वन्दे नंदिविवाहं

भवहर हरिदेवं ॥ १ ॥ गुप्तं लिंगं वन्दे वन्दे बिल्वेशं । बाणं लिंगं वंदे वंदे उदितेशं । वन्दे भैरवलिंगं वन्दे त्रिशूलेशं । स्तंभं लिंगं वन्दे वन्दे गुरुमीशं ॥ २ ॥ वन्दे श्रीगौरीहरमीशं प्रभुदेवं । वन्देहं चोदुंबरमीशं गुरुदेवं । पुष्करतीर्थादितीर्थं वन्दे वरदेवं । श्रीशंभु-महादेवं वरदेशिकदेवं ॥ ३ ॥ श्रीशंकर परशक्तिगणपतिवरदेशं । षण्मुखकार्तिकेयं वन्दे हरिमीशं । ब्रह्माणं देवेशं नंदीशं त्रीशं । दत्तं श्रीगुर्वीशं नृसिंहयतिधीशम् ॥ ४ ॥

## ३९ आरती श्रीपादश्रीवल्लभांची

जयजय श्रीपाद श्रीवल्लभ गुरुमूर्ते । श्रीमद्दत्त अवतार तारक सत्कीर्ते ॥ धृ० ॥ पीठापुरसद्द्विजवर राजा सुमति सती । भार्या सुमतिर्नाम्ना दत्ते दत्तमतिः । आमायां श्राद्धदिने माध्याह्ने सुगतिः । श्रीदत्तः स्वच्छन्दो प्राप्तो भिक्षार्थी ॥ १ ॥ सुमतिर्दृष्ट्वा रूपं सिद्धं श्राद्धान्नं । श्राद्धात्पूर्वं चादाद्भिक्षुं भिक्षान्नं । तुष्टो दत्तो मातर्वरये-प्सितमान्य । पुत्रार्थी सा साध्वी पुत्रत्वं नोन्यं ॥ २ ॥ मत्सदृशोन्यो न च तत्पुत्रो जातोहं । मद्वचनं त्वं पालय सत्यं श्रीशोहं । श्रीपाद-श्रीवल्लभनाम्ना भविताहं । इत्युक्त्वा सोंतर्धाद्दपतिहृत्स्थोहं ॥ ३ ॥ भाद्रे मासि चतुर्थ्यां शुक्ले रव्युदये । जातो बालकबालः प्राज्ञोज्ञ-हृदो ये । तत्धृद्ग्रंथिं भित्वा वाग्वेदोपचये । तत्पादं श्रीपादं वन्दे सत्युदये ॥ ४ ॥ भूगोलतीर्थयात्रां कृत्वा मुनिवेषः । त्र्यब्दं गोकर्णेऽस्थात्कुरु-पुरमेत्येषः । मूढसुतार्ताविबुधं तत्पुत्रं शेषः । कृत्वा शनिप्रदोषव्रतमी-श्वरतोषः ॥ ५ ॥ भक्तो दर्शनकांक्षी रज़को नित्यं सः । प्रांगण-शुद्धिं कृत्वा नत्वा सुमनाः सः । भक्त्या भेजे श्रीपादगुरुराजपदं सः ।

तुष्टो राज्यं योऽदाद्भक्तेष्टकृदीशः ॥ ६ ॥ वाणिज्यवृत्तिकर्ता द्विज एको भक्तः । श्रीपादमतिः सोगाब्दहुधनयुक् स मतः । चोरहतो मार्गे श्रीपादोऽसिकरात्तः । संजीवित उत्धारित भक्तनिधिः पाता ॥ ७ ॥ आश्विनकृष्णद्वादशीहरितिथिबुधवारे । श्रीकृष्णामृतसारेसारे संसारे । जातेऽदृश्ये भजकान् राति मनो भज रे । नृसिंहयति वरदेशिक वन्दे त्वाऽसदरे ॥ ८ ॥ ईदृग्गुणगणचरितो दत्तः श्रीपादः । अनंतलीलानंतोऽनंतो यत्पादः । स श्रीनृसिंहयतिराट्स्थापितभूपादः। नानालीलाचरितो नृसिंहहृत्पादः ॥ ९ ॥

## ४० श्री नरसिंहसरस्वती दत्तगुरूंची आरती

जयजय श्रीगुरुभूमन् नृसिंहयतिधीश । पूर्ण ब्रह्म सनातन तारक जगदीश ॥ धृ० ॥ भूत्वांबासुतमाधवसुत ईशो दत्तगुरुः । वेदोवागष्टाब्दे भूत्वा लोकगुरुः । काशीं गत्वा संन्यासी कृष्णगुरुः । भूत्वा योजोनंतो वन्दे देवगुरुः ॥ १ ॥ विद्वन्माधव एत्य च दत्वा संन्यासं । बहुशिष्यवर्गयुक्तः स्थापितसंन्यासं । मार्गं विशदीकृत्वा यात्रार्थं वासं । गोदातीरे शूली रोगं संन्यासं ॥ २ ॥ सायंदेवं भीतं मृत्युभयत्राता । कृष्णातटभुवनेश्वरि द्विजसुत ईशाप्तः । सुविधजिव्हं कृत्वा सभसंगम आप्तः । तं वन्दे भगवन्तं यो जनसकलाप्तः ॥ ३ ॥ अमरेश्वरयोगिनियुक् शंबाभिक्षान्नं । भुक्त्वा तृप्तो मूले संपत्संपन्नं । द्विजवरभक्तं कृत्वा त्रिस्थलीसंपन्नं । द्वादशमाब्दं स्थित्वाऽगाद सुसंपन्नं ॥ ४ ॥ भीमामरजासंगम एत्य प्रभुदत्तः । नानालीलाः कृत्वा यच्छूत्रणेऽघान्तः । सद्गुरराजः श्रीमठहृष्टतमस्वान्तः । स्नात्वा संगम एत्य च भुक्त्वा निजचित्तः ॥ ५ ॥ वंध्यामहिषीदोहनमृत-

सत्पतिदानं । वंध्यासुपुत्रदानं यतिगर्वाहरणं । द्विजकुष्ठरोगहरणं श्री शैलागमनं । सवेऽष्टभक्तागमनं सस्यामिनदानं ॥ ६ ॥ प्राग्दत्तप्रवरो यो यवनो नृपवेषः । तद्ग्राममेत्य सर्वानंददधृतवेषः । सर्वानंदं कृत्वा पुष्पासनमीशः । सोंतरधाद्गंगायां भगवान् यतिवेषः ॥ ७ ॥ पौषे सिते द्वितीयाशनिवासरकाले । मध्यान्हे श्रीनरहरिनामाभूत्सुकुले । चन्द्रोऽस्य मूर्ध्नि करपत्के गंगाकमले । चक्रं शंखं मालां कुंडीं डमरु-शूले ॥ ८ ॥ माघे कृष्णे प्रतिपदि भृगुवासरसमये । श्रीशैले स्वेंऽ-तरधात्सच्चित्सुखनिलये । त्र्यात्मा दत्तात्रेयो नृसिंहयतिहृदये । जागर्ति प्रभुरमरापुरि चासौ कमये ॥ ९ ॥

## ४१ सोमवार अमरेश्वर आरती

जय शंभो शशिशेखर अमरेश्वर देवा । नीराजयामि योगिनियुत शंकर शर्वा ॥ धृ० ॥ वन्दे शिव गौरीशं नदीशं सुखद । श्रीशंकर गंगाधर धरणीधर सुखद । परशूधर मृगवसनाधर परमसुमोद । मुद-मर्पय मयि करुणासागर गुरुवरद ॥ १ ॥ यन्निकटेऽन्नसुपूर्णा जगदंबा माता । कृष्णावेणीपंचगंगायुजि पाता । पाता योऽखिल-जगतां विद्यानिधिदाता । वन्दे त्वाममरेश्वरलिंगं चित्सविता ॥ २ ॥ यः श्रीदत्तात्रेयो नृसिंहयतिवेषः । भूत्वामरपुर्यां यो शंबाभुक् शेषः । नित्यं नित्यो मूले धनदः सुतपोषः । तेन स्तुतामरेश्वर वन्दे धृतशेषः ॥ ३ ॥ ईशान्यां गोतीर्थं रुद्रपितृतीर्थं । शुक्लं चामरतीर्थं त्वघना-शनतीर्थं । काम्यं सिद्धं कोटिं शक्तिं परतीर्थं । प्रयागतीर्थं वन्दे स्नात्वाखिलतीर्थं ॥ ४ ॥ द्वादशतीर्थस्नानं कृत्वा त्वमरेशं । योर्चे-

यदि देवेशं शर्वं परमेशं। स सर्वसुखहृच्छंकरलोकं गच्छेत् शं। वन्दे तं भगवंतं नृसिंहयतिधीशं ॥ ५ ॥

## ४२ मंगळवार श्रीरेणुकेची आरती

जयदेवि जयदेवि जय श्रीरेणूके। विधिमुखविबुधाराधित सेवित रेणूके ॥ धृ० ॥ विस्मृतवेदब्रह्मा ध्यात्वाऽत्रिजमीशं। नत्वा विविधैः स्तोत्रैस्तुष्टात्र परेशं। तत्कथितत्वन्महिमानं ब्रह्म सुरेशं। स्मारयसि त्वां वन्दे कुरु करुणालेशं ॥ १ ॥ गुरुबोधितकृतवीर्यजतपसा दत्तः स्यात्। संतुष्टोपि च राज्ञे चेप्सितवरदः स्यात्। पित्रर्थं रामस्तुत-दत्तस्याऽस्याऽऽस्यात्। स्तुतरूपे रक्षय मां बहुविधजन्मभयात् ॥२॥ विधिहर्योश्च ममैतत्पूज्यत्वं प्राप्तं। यत्पूजनतः शंभुश्चेत्यवदत्स्वसुतं। एनं त्वन्महिमानं के जानंति कथं। कृपया ज्ञानं बोधय निजपदरत-भक्तं ॥ ३ ॥

## ४३ बुधवार विठ्ठलाची आरती

जयदेव जयदेव जयरुक्मिणिकांता। करुणानिधिपदकमला आरति भगवंता ॥ धृ० ॥ पदि गंगा पीतांबर कटिकर वरदाता। हृदि कौस्तुभ कमलाक्षा दीनजनोद्धर्ता। भर्ता जो जगताचा कलि-मलभयहर्ता। वंदूं पदकमला जो स्वधामसुखदाता ॥ १ ॥ राधा-रुक्मिणिरमणा देवा घननीळा। रत्नमुगुट शिरिं शोभे कंठीं वनमाला। प्रियपुंडलीकवरदा धीशा जनपाळा। दर्शनमात्रें सुखदा देवा तारि मला ॥ २ ॥ आषाढी कार्तिकी उत्सव जे करिती। त्याते भुक्ती मुक्ति देशी संपत्ति। ऐशा तुज देवेशा करितों मी विनति। ठेवीं तव पदिं दासा मज नान्या सुगति ॥ ३ ॥

## ४४ गुरुवार श्रीगुरुदत्ताची आरती

जय भगवन् जयभूमन् श्रीदत्तादिगुरो। अनसूयात्रिवरप्रद नत-जनकल्पतरो ॥ धृ० ॥ देवाब्दशतध्यानात्तुष्टो भगवान् सः। त्र्यात्मा योगीराजः षड्भुजपरहंसः। दत्तस्तस्माद्दत्तोऽत्रिजवरदोऽवासाः। प्रदोषमृगबुधपर्णायां परपुरुषः सः ॥ १ ॥ गेहेऽत्रेरवतीर्णो यः पर-मात्मा तं। देवाः सिद्धा ऋषयो विश्वात्मानं तं। रूपं दृष्ट्वाऽत्यंतं योगिजनस्वांतं। योगीजनवल्लभ इति प्रोचुस्तं संतं ॥ २ ॥ मुनिसुत सहितः क्रीडांचक्रेऽवनलीलां। जलधौ चित्रविलासः स्वां करुणालीलां। अखिलगुरो विश्वंभर दर्शय तां लीलां। त्वं सिद्धराजनामा तारय माऽ-लीलां ॥ ३ ॥ वेदाः सांगा यज्ञा लुप्तास्तान्सृष्ट्वा। धर्मपथो विशदी-कृत ईशा स्वानिष्ट्वा। सत्यज्ञानानन्दो देवर्षीस्तुष्ट्वा। तं दत्तं वन्दे-ऽहं प्राविशादित्सृष्ट्वा ॥ ४ ॥ ध्येयः पुंसामीशो ज्ञेयः स च भक्तान्। भक्तिं योगं दत्वा ध्यानेनासक्तान्। यतिवेषं धृत्वादान्मुक्ति-पदं सक्तान्। देवानर्जुननहुपालर्कान् स्वान्नागान् ॥ ५ ॥ प्रऱ्हादाय वरं साध्ययदूबोधं। दत्वाऽवधूतवेपं छित्वाऽखिलबंधं। अनंतलीलो दत्तोऽवतु मां हृन्दोधं। कृत्वा श्रुतिमतिदानं वरगुरुसद्बोधम् ॥ ६ ॥ आयुः सुसोमकांतो द्विजविष्णूदत्तः। वरसत्कर्मसुमंत्रान् दत्वा चोद्धर्ता। जंभं हत्वा सुरतः स्वस्वपदं दत्वा। दाता सुरेंद्रनमितो रक्षतु मां पाता ॥ ७ ॥ ब्रम्हेडितरेणूका रामस्य च माता। माता जगतां तत्सुत एत्याखिलकर्ता। सत्यं ज्ञानं दत्वा रामस्य च समता। येनार्पिता च सोऽव्याज्जन्मभयात् त्राता ॥ ८ ॥ श्रीपादश्रीवल्लभनृसिंहगुरुरूपः।

कलिमलदहनं कृत्वा नानागुणरूपः । भक्तोद्धारं कृत्वा स्वांतः सद्रूपः । नृसिंहयतिधीशो मामवतु शिवोऽरूपः ॥ ९ ॥

## ४५ शुक्रवार श्रीजगदंबेची आरती

जयदेवि जगदंब सच्चित्सुखमूर्ते । आरति पदकमले ते विमलेऽखिलहृत्स्थे ॥ धृ० ॥ मूलाधारे वेदाधारे त्वां वन्दे । देवेडितसत्सेवितपदपद्मे सुखदे । भक्तमनोरथपूर्णे सत्कृतिपूर्णमुदे । मुदमर्पय मयि मातर्माधीशे परदे ॥ १ ॥ सृष्टिस्थितिलयकारिणि दानवरिपुधात्री । शमदमसाधनदात्री वरदेशिकदात्री । छात्रीकृतर्षिसुरवरगणवन्दितसत्री । सप्तत्रिसप्तफलदे वेदविदां कर्त्री ॥ २ ॥ अंब श्रीरेणुके मातः श्रीकाले । दुर्गे दुर्गमसंवित्सुखदे भवविमले । कमलाक्षी कमलोद्भवमातर्ज्ञानबले । अबले निधेहि मयि ते बलमीश्वरि सुबले ॥ ३ ॥ श्रीलक्ष्मीः श्रीगौरि वागीश्वरि मातः । तारय मां भवभीतं भीतजगत्पातः । भवहरिविधिविनुते निर्गुणगुणचेतः । विद्याविद्ये रूपे दर्शय मे मातः ॥ ४ ॥

## ४६ शनिवार आरती मारुतीची

जयदेव जयदेव मारुतिवरधीरा । आरति तव पदकमले भवतु मम सुधीरा ॥ धृ० ॥ अंजनिपुत्रं वन्दे वन्दे हरिवीरं । वन्दे वायुसुतं तं वन्दे रणधीरं । श्रीरामचन्द्रसीताशोकहरं शूरं । वन्दे शिवावतारं स्वभक्तसुखकारं ॥ १ ॥ समुद्रतरणं लंकादहनं येन कृतं । इंद्रजिताध्वरहरणं कृतिना येन कृतं । सौमित्रिजीवनार्थं द्रोणगिरिं नीतं । वन्दे तं भगवन्तं हरिकुलहरिभक्तम् ॥ २ ॥ अहिरावणमहिरावणरावणकुलनाशं । कृत्वा श्रीरामपदं ध्यात्वा भवनाशं । मत्वा श्रीरामं-

हृद्दं पाटितभुवनाशं । वन्दे तं हनुमन्तं स्वजनार्तिविनाशम् ॥ ३ ॥ यन्नाम्ना भवतरणं दुर्जनभयहरणं । असुरविषार्तिसुहरणं संसृतिहृज्ज्ञानं । भजकमनोरथपूर्णं धृतनामसुनामन् । वन्दे सुखाब्धिमग्नं नृसिंहयतिधीनम् ॥ ४ ॥

## ४७ श्रीपादस्वामीची आरती

जयदेव जयदेव जय श्रीपादगुरो । आरति तव पदकमले भो नतजनकल्पतरो ॥ धृ० ॥ वेदातीरे शंकरपुरि वासो यस्य । धर्मात्मा वेदविदां श्रेष्ठो मुनिवर्यः । सत्कर्मरतो योगी दीनार्तिहरो यः । वन्दे श्रीपादयतिं भजकाकहरार्यः ॥ १ ॥ तीर्थपदो द्विजवर्यो ह्यहिमृत्युभयार्तः । त्वत्पदकमलनतोऽभूद्भवरोगविमुक्तः । साक्षात्त्वं परमात्माऽलौकिककृतिकर्तः । पावनत्वन्नाम सदा पुनातु मम जगतः ॥ २ ॥ यच्चितिधूमाद्रक्षोमुक्तः स्वर्गमगात् । यच्चितिभूतिविभूषितमर्त्यो मुक्तिमगात् । यन्नाम मुक्तिमकरोत् सर्वान् शीघ्रमघात् । स श्रीपादस्वामी रक्षतु मां दुरितात् ॥ ३ ॥ कलियुगचतुःसहस्राब्देऽश्विनमासे । रविवासरोनुराधायोगोऽखिलहृत्सः । भूत्वा चास्ते यो जागर्ति शिवः सः । भार्गवमुनिगोत्रार्को रामोऽवतु नः सः ॥ ४ ॥ सुरमुनिवंदितपादो यस्य जगत्पादः । श्रीपादश्रीवल्लभनृसिंहगुरुपादः । यत्र श्री शंकरसुरगणवंदितपादः । तत्त्वत्पदकमलरसो नृसिंहहृन्मोदः ॥ ५ ॥

## ४८ श्रीदत्ताची आरती

जय जय श्रीमद्गुरुवरदेवाधिदेवा । पंचारति हे चरणीं घडवी मज सेवा ॥ जयदेव० ॥ वास तुझा ब्रह्मांडीं चालक तूं देवा । अससी तूं सर्वांचा आनंदठेवा । वदती वेद सरस्वति न होय हा ठावा ।

कामति माझी नमितों पदिं देईं ठावा ॥ १ ॥ सद्दाता तव महिमा वर्णितसे वेद । मोक्षाचीं सत्रें हीं ठेविलिं बहुसुखद । अतिदुःखें शक्ति नसे हरि माझा खेद । ज्ञानामृत पाजुनि दे अखंड तव पद ॥ २ ॥ लीला अनंत तूझ्या वदता आनंत । चारी साही आठरा पाहता नच अंत । नारदव्यासमुनींद्र ध्याता नच येत । तो तूं देहा धरुनी देसि करीं स्वार्थ ॥ ३ ॥ पदिं गंगा कटिं शोभे शाटी कौपीन । हृदयीं लक्ष्मीकौस्तुभभृगुपदलांछन । दंडकमंडलु हातीं रवींदुसम वदन । राहो माझे हृदयीं हेंचि सदा ध्यान ॥ ४ ॥ आलिंगो त्वड्मूर्ती दिसोच हे नयना । ऐको कर्ण गुणांतें नामामृत रसना । त्वत्पदसुमगंध सदा लागो हा घ्राणा । दे परभक्ति श्रद्धा सतत करूं नमना ॥ ५ ॥

## ४९ श्रीवासुदेवानंदसरस्वतींची आरती

जय जय श्रीमद्गुरुवर स्वामिन् परमात्मन् हंसा ॥ वासुदेवानंद-सरस्वति आरति तदहंसा ॥ धृ० ॥ सोऽहं हंसः पक्षाभ्यां संचरसि ह्याकाशे । वासस्ते खलु लोके सत्ये क्रीडा तव मानसे ॥ १ ॥ मुक्ताहारो ब्रह्मवाहको वैराड्रूपधर । भक्तराजहृत्ध्वांततमोहृत्स्वी-कुरु मां च हर ॥ २ ॥ पक्षस्यैके वातेनैते भीताः काकाद्याः । पलायितास्ते द्रुतं प्रभावाद्भवंति चादृश्याः ॥ ३ ॥ एवं सति खलु बालस्तेहं ग्रसितः कामाद्यैः । मातस्त्वरया चोद्धर कृपया प्रेषित-शांत्याद्यैः ॥ ४ ॥ दासस्ते नरसिंहसरस्वति याचे श्रीचरणम् । भक्तिश्रद्धे वासस्ते हृदि सततं मे शरणम् ॥ ५ ॥ जय जय० ॥

## ५० तीर्थांची आरती

कृष्णावेणींपंचगंगासंगमीं। येउनि सुरमुनि वंदिति श्रीदत्तस्वामी। तो करुणासिंधु हृदयीं सांठविला नामी॥ तद्रूपची होउनिया विचरतसा स्वामी। जयदेव जयदेव पुरुषोत्तममूर्ते। जय आनंदमयमूर्ते वासूदेवानंदसरस्वति गुरुकीर्ते। जयदेव जयदेव ॥ १ ॥ धृ० ॥ सद्विद्या संपादुनि उपनिषदीं रमला। तीर्थें हिंडुनि सर्वा गुरुपदिं रंजविला। गुरुचरितादिग्रंथामृत हे पाजविला। यच्छ्रवणें पठणें हरि हरिभवविधि झाला ॥ २ ॥ श्रीमद्दत्तगुरुयश दशदिशिं गाजविलें। जगदीश्वर दत्तगुरु हृदि ज्यांच्या डोले। सुरमुनि गंगाकृष्णा रेवास्तुति बोले। तो हा सद्गुरु यत्पदिं मम मानस रमलें ॥ ३ ॥ प्रथमानंदवत्सरि देहीसा झाला। अन्यानंदवत्सरि विदेहि हा भरला। मध्यें सर्वानंदमयकायचि गमला। तो आनंदमयचि गुरु गुरु मद्धृदिं गमला ॥ ४ ॥ आठराशें छत्तिस शकिं ज्येष्ठीं कुहु तिथीला। आनंद संवत्सरिं स्वानंदीं भरला। मंगलदिनिं सवितास्ता ऊर्ध्व दिशा घटिला। ब्रह्मचि होउनि ब्रह्मी गुरुपदिं हा बसला ॥ ५ ॥ सद्विद्या देउनिया सन्मार्गीं लावी। द्या तव पदभक्ति जी भवसिंधू नुरवी। अघौघहारक नामस्मरण मनीं वसवी। त्वत्पदकमलरसास्पद नृसिंहहृत्करवी ॥ ६ ॥

## ५१ श्रीगुरुस्तोत्र

नमः श्रीगुरो मेशधीशे दयाब्धे। भयार्तिघ्न ते स्वात्मदो वासुदेव। यतीट् सेवितानंद पादाब्जयुग्मं। सदा मे हृदि स्थास्नुतां यातु देव ॥ १ ॥ भक्तिश्रद्धे देहि मे ते दयालो। दासो दीनो भावतापेन

तप्तः । सर्वैस्त्यक्तो द्वारि तेऽत्र प्रसंस्थोऽहं मां मातः पालयाऽद्य स्वबालम् ॥ २ ॥ आलोक्य मामच्युत ईश्वरोऽपि । भीतोगमत्सागर-सूरशैलान् । सत्यं तथा च तव हृत्कमले स्थितो यः । श्रांतः स्व दर्शय यते गुरुवासुदेव ॥ ३ ॥ मा भीरिति वचनं मे देहि दयालो गुरो यतिश्रेष्ठ । नान्यो मे रक्षार्थं धावति भोः श्रीगुरो जगन्मातः ॥ ४ ॥ त्वयि भक्तिं मे वर्धय दुर्हृत्तम ईश नाशय अशेषं । यच्च तवेष्टं तत्कुरु मयि भोः सर्वज्ञ वक्तुमसमर्थः ॥ ५ ॥ भक्तिं च मे वर्धय भोस्त्वदीये । रूपे तथा नाशय हृत्तमश्च । दुर्वासनाश्च गुरुवर्य दया-निधे ते । यच्चेष्टमेव कुरु तन्मयि सार्वभिज्ञ ॥ ६ ॥ मा भीश्च भोस्तेस्त्वभयं सदैव । याचेऽहमेतद्वचनं गुरो ते । अज्ञोऽहमीश करुणाघन वासुदेव । रक्षस्व मां सर्वत एव सर्वदा ॥ ७ ॥

## ५२ अमरेश्वरपद

भज भज अमरेश्वरलिंगं । परब्रम्ह यत्पूर्णमनन्तं सर्वेश्वरलिंगं ॥ भज भज० ॥ धृ० ॥ ब्रम्हेंद्राद्या ऋषयः सर्वे । गंधर्वाद्या गणाश्च सर्वे । ध्यात्वा तल्लिंगं ॥ १ ॥ आदिगुरुं तं दयाघनं तं । अखिलहृदिस्थं स्वात्मानं तं । श्रुतिशिरउदितं ज्ञानमनंतं । पश्याखिललिंगं ॥ २ ॥ सुबाणरावणसुरमुनिसंस्तुत । नंदीभृंगीरिटिगणपूजित । हिमनगजा-गणपतिषण्मुखयुत । त्वाल्लिंगं ॥ ३ ॥ कृष्णावेणीपंचनदीयुत । संगम-संस्थित सुरेंद्रसेवित । त्वत्पदकमलासक्तमनोंतर्दर्शय तल्लिंगं ॥ ४ ॥ सुवीरभद्रो नित्यानंदाः । सनकसुनंदनसुनारदाद्याः । तव पदकमले सन्मानसदाः । संति सदा लिंगं ॥ ५ ॥ सदस्ति भाति प्रियमानंदं । चिद्घनपूर्णं नित्यानंदं । शांतसुधियाऽकामानंदं । पश्यामितलिंगं ॥ ६ ॥

न पश्यतीदं कश्चन भक्त्या। ज्ञातुं शक्यं गुरुपदसक्त्या। यस्मात्त-स्मात्तत्सदुक्त्या। पश्य सुहृल्लिंगं ॥ ७ ॥ सीतारामः शिवगुरुरूपं। ध्यात्वागस्तेर्वचसा रूपं। वृत्वा शैवं पश्यति रूपं। अमरेश्वरलिंगं ॥ ८ ॥ सुयोगिनीशं त्रिभुवनमीशं। शशिगंगाधरफणींद्रभूषं। सन्मा-तिवरदं विभूतिमीशं। वन्दे गुरुलिंगं ॥ ९ ॥ श्रीगुरुयतिवरवासु-देवयति। पदनतनरसिंहसरस्वती। श्रीगुरुकृपया दत्तदृङ्मति। पंश्यति हृदि लिंगं ॥ भज भज० ॥ १० ॥

## ५३ मारुति नामानि

हनुमानंजनिसुतो वायुपुत्रो महाबलः। रामेष्टः फाल्गुनो गोत्रः पिंगाक्षोऽमितविक्रमः ॥ १ ॥ उदधिक्रमणश्रेष्ठो दशग्रीवस्य दर्पहा। लक्ष्मणप्राणदाता च सीताशोकनिवर्तनः ॥ २ ॥ हनूमतस्तु त्रिदश नामानीमानि यो जपेत्। तस्य कस्य भयं नास्ति जायते भक्ति-मान्नरः ॥ ३ ॥

## ५४ श्रीवासुदेवानंदसरस्वतीचरित्रम्

आदौ रूपमरूप ते गुणगणेशान्मानवं स्वीकृतं।
वर्णाद्याश्रमधर्मधारणमथो श्रीदत्तदेवेट्गुरो ॥
तत्संस्थापनतीर्थपादवपुयुक् तुर्ये कवीट् स्वार्तिहन्।
वन्दे ते गुरुवासुदेव यतिराट्सेव्यांध्रिकंजं परम् ॥ १ ॥

(टीका) हे अरूप हे गुणगण, ईशात्, तदारभ्य। ते त्वया। आदौ सृष्ट्यादौ। रूपं, धृतमित्यध्याहारः। ततः मानवं मनोरिदं मानवं स्वीकृतम्। तेन रूपेण वर्णाद्या वेदास्तेभ्य आश्रमादिधर्माणां स्मृत्यादिरूपेण धारणं स्वीकृतं। भो श्रीदत्तदेवेट्गुरो देवानां ईशा-

स्तेषां गुरो। तत्संस्थापनतीर्थपादवपुयुक् तेषां वर्णाश्रमधर्माणां संस्थापनार्थं तीर्थानि पादे येषां वपुत्रां तद्युक्। त्वमेव असि नान्यः। अतस्ते तव। हे कवीट्स्वार्तिहन् कविः शुक्र ईट् गुरुर्येषां ते कवीशः तत्सदृशभूपेभ्यः सकाशात् या स्वानां स्वकीयभक्तानां आर्तिः तां हन्ति तत्संबुद्धौ। भोः गुरुवासुदेव। यतिराट्सेव्यांघ्रिकंजं परमहंसैः सेव्यं पादकमलं। परं मायया रहितं शुद्धस्वरूपं वन्दे। **अन्योर्थः**—हे अरूप ब्रह्मस्वरूप। आदौ ते त्वया। गुणगणेशात् गुणैः शमदमाद्यैर्युक्तात् गणेशनामब्राह्मणसकाशान्मानवं स्वीकृतं। ततो वर्णाद्याश्रमाणां च धर्मधारणं स्वीकृतं। भो श्रीदत्तदेवेट् गुरुर्यस्य तत्संबुद्धौ। तत्संस्थापनतीर्थपाद स्वार्तिहन् कवीट्। तुर्ये चतुर्थाश्रमे वपुर्युजि योगे यस्य सः तथा। त्वं दीनान् त्रातुं प्रागदृष्टयोगेन स्थितोसि। त्वत्पदकमलसेवात्रैविध्याकांक्षी दासोऽहं ते यतिराट्सेव्यांघ्रिकंजं परं वन्दे॥ ॐ तत्सत्॥

## ५५ मुंबई श्लोक

वन्देऽमुंबांतर्धात्री मायाशक्तिस्वरूपिणी।
गुरुवाचामगम्या तां नमामि पदमात्मनः॥ १॥

# गुरु-शिष्यसंवाद

**शिष्यः**—ज्ञानसमाधि व हठयोगसमाधि यांत अंतर काय ?

**स्वामीः**—या दोहोंत हेंच अंतर आहे कीं हठयोगसमाधि आयस ( लोखंडी ) सुवर्णासारखी आहे व ज्ञानसमाधि मूल ( निसर्गसिद्ध ) सुवर्णासारखी आहे. लोखंडी सोनें याचा अर्थ किमयेनें लोखंडाचें जें कृत्रिम तऱ्हेनें बनवितात तें सोनें. असलें सोनें कालांतरानें पुनः लोखंड या मूलस्थितीला येतें, असा लोकप्रवाद आहे. यास आधार—वृद्धशिक्षेंत—**योगैः समाहितसमाहितता मतायःस्वर्णोपमा त्वनुपमा प्रथमा मता यः। तत्राक्षमःस परमां परमात्मदत्तात्रेयाश्रयाद् गतिमियात् सततानुरक्तः।**

**भावार्थः**—योगसमाधीपेक्षां ज्ञानसमाधि श्रेष्ठ असून ती ध्यानानें प्राप्त होते; म्हणून ध्यानाचा अभ्यास केल्यानें स्वरूपस्थिति प्राप्त होते. यास उदाहरण—आयस सुवर्ण व मूल सुवर्ण यांचा दृष्टांत वर दिलाच आहे. मूल सुवर्ण कधींहि बदलत नाहीं, परंतु आयस सुवर्ण कालांतरानें मूळ जातीवर जातें.

**शिष्यः**—ध्यानयोग सिद्ध झाल्याची खूण काय ?

**स्वामीः**—याची खूण आत्मसाक्षात्कार. स्वरूप-स्थिति प्राप्त होणेंच.

**शिष्यः**—ध्यानयोग धरल्यावर किती कालांत हें साध्य आहे ?

**स्वामीः**—याला अमुक अशी कालमर्यादा नाहीं. हें त्या साधकाच्या भूमिकेवर अवलंबून आहे. शास्त्रवचन असें सांगतें कीं,

**मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः। दुर्लभं त्रयमेवैतद् देवानुग्रहहेतुकम् ॥** ( वि. चू. )

**भावार्थः**—वेदांतसाक्षात्काराला कालमर्यादा नाहीं. परंतु गुरुप्रसादानें व ईश्वरानुग्रहानें मात्र तो त्वकर होणें शक्य आहे. यास दृष्टांत एकाद्यानें जसें स्वतःजवळील धन स्वेच्छेनें दुसऱ्यास दान देऊन त्यास सधन करून टाकावें तसें हें आहे. मनुष्यत्व व मुमुक्षुत्व हें असें कालाधीन आहे.

**शिष्यः**—बरें तें असो. पण साधकानें तरी दिवसांतून किती वेळ हें साधन करावें ?

**स्वामीः**—यास कालाचें अमुक एक प्रमाण नाहीं. सर्वच काळ हें करीत राहिलें पाहिजे. नुसतें ठराविक काम करून वेठ मारण्यानें व शपथेंतून सुटण्यानें हें जमणार नाहीं. ज्याला खरोखरीच ही अवस्था प्राप्त करून घेणें असेल त्यानें '**आसुप्तेरामृतेः कालं नयेद् वेदान्तचिन्तया** ।' ( जीवन्मुक्ति ) रोज निजेपर्यंत व जीवांत जीव असेपर्यंत हें वेदांतचिंतन केलेंच पाहिजे, म्हणजेच तो वेदान्तसाक्षात्कार होतो.

**शिष्यः**—नुसत्या ईश्वरीप्रसादानें वा देवानुग्रहानें मुमुक्षुत्व येतेंच अशी खात्री आहे काय ? किंवा त्यालाहि पुनरपि कालाची जोड लागतेच ?

**स्वामीः**—मनुष्यत्व व मुमुक्षुत्व हीं ईश्वरीप्रसादानेंच होतात. तथापि इतकें सर्व एकामागोमाग प्राप्त होऊन देवानुग्रह झाला तरी आत्मसाक्षात्काराचा कालहि यावाच लागतो. कारण या गोष्टीला

कालाची अनुकूलता असावी लागते. अथवा दुसऱ्या भाषेंत बोला-वयाचें तर या कामाला कालाचा प्रतिबंध निघावा लागतो. उदा-हरणार्थ--गर्भाधान झालें तरी मूल अव्यंग परिपूर्ण बनण्यास जी कालाची नवमासाची अवधि ती निसर्गनियमाप्रमाणें मिळालीच पाहिजे. सर्व योनिसंभवास हें अत्यंत आवश्यक कालबंधन आहेच. मनुष्यप्राणीहि योनिसंभव आहेच. अयोनिसंभव अवतारिक महात्म्यांची गोष्ट वेगळी.

**शिष्यः**--कालाच्या प्रतिबंधास कारणीभूत कोण ?

**स्वामी**--कालाच्या प्रतिबंधास प्रारब्ध हेंच कारणीभूत आहे.

**शिष्यः**--मग हा कालाचा बांध निघण्यास उपाय ?

**स्वामीः**--यास उपाय अभ्यास व पूर्वसंचितभोग व क्रियमाण न करणें.

**शिष्यः**--याशिवाय प्रारब्धनाशाला आणखी एकादा उपाय जोडीला आहे काय ?

**स्वामीः**--आहे, उपाय आहे, व तो म्हणजे ईश्वरीप्रसाद व सद्गुरु अनुग्रह. या दोहोंनीं व त्याच्या जोडीला अभ्यासानें तें प्रारब्ध नष्ट होऊं शकतें.

**शिष्यः**--सद्गुरु अनुग्रह व ईश्वरीप्रसाद कशानें होईल ?

**स्वामीः**--गुरुपादसेवेनें होईल. मात्र ती सेवाहि तशीच एक-निष्ठपणें व अनन्यभावानें झाली पाहिजे.

**शिष्यः**--गुरुसेवेनें तरी त्यांचा अनुग्रह व प्रसाद आपले मना-प्रमाणें लवकर होऊं शकेल काय ?

**स्वामी**:—त्याची खात्री नाहीं. हें सर्वस्वीं त्यांच्या अधीन आहे. त्यांनीं मनांत आणलें तर तें ताबडतोब होऊं शकेल. पण तें त्यांच्या मनांत येणें न येणें हें केवळ त्यांच्यावरच अवलंबून राहील.

**शिष्य**:—यास आणखी कांहीं उपाय ?

**स्वामी**:—यास उपाय एकच. तो हा कीं, शिष्यानें आपल्या निःसीम सेवेनें सद्‌गुरूंचें मन आपल्याकडे वेधून घेतलें पाहिजे. तान्ह्या मुलास जशी कडकडून भूक लागली असतां टाहो फोडून तें कळवळून रडूं लागतें व असें होतांच त्या तान्हुल्याची माता मग कितीहि कामांत गर्क असो, तें सर्व काम टाकून आधीं त्या आपल्या बालकास स्तनपान करून त्याची भूक शमविते तसेंच हुबेहूब येथें आहे. मूल जोंवर हंसत खेळत आहे व आपल्याच नादांत आहे, त्यास मातेची जरूरी नाहीं, तोंपर्यंत ती तरी त्यास कशास मुद्दाम उचलून घेईल व पाजील ? म्हणून मुमुक्षूला कडकडीत वैराग्याची भूक लागल्याशिवाय त्या सद्‌गुरुमाऊलीचें चित्त त्याचेकडे वळणारहि नाहीं व त्यास ज्ञानामृत पाजून त्याची ज्ञान-भूक भागविणार नाहीं. यांत काय तें समजून घ्यावें. याचा अर्थ गुरूचें चित्त वेधण्याचा सर्व बोजा शिष्यावरच पडतो. गुरु कृपा करीत नाहीं म्हणून त्यांचेवर रुसून जाणाऱ्या शिष्याचा जो तोटा होतो त्याचें कारण त्यांच्या ठिकाणीं गुरुभक्तीचा अभाव असतो हेंच होय. मघाशीं दिलेल्या शिशुमातेच्या उदाहरणावरून हें नीटपणें कळलेंच असेल.

**शिष्यः**—होय, मला आतां अगदीं बरोबर रीतीनें कळलें. आम्ही आपली फिर्याद नेल्याशिवाय राजानें तरी आमचेबद्दल चौकशी कां करावी ? तसेंच येथेंहि दिसतें. बरें तें असो. आतां माझें असें म्हणणें आहे कीं, कोणत्याहि उपायानें कां होईना जर स्वकर्मानुष्ठानानें अथवा दैववशात् ज्ञान प्राप्त झाल्यास तेवढ्यानें भागेल काय ?

**स्वामीः**—नाहीं, तेवढ्यानें मुळींच भागणार नाहीं. तसें असतें तर शुकाचार्य हे जन्मतः ज्ञानीच होते, पण तेवढ्यानें त्यांचें भागलें नाहीं.

**शिष्यः**—तर मग त्यांना काय अधिक करावें लागलें ?

**स्वामीः**—त्यांना अभ्यास करावा लागला.

**शिष्यः**—कसला अभ्यास व तो कशासाठीं ?

**स्वामीः**—योगाचा अभ्यास व तो स्थितप्रज्ञतेसाठीं. ज्ञान झालें तरी त्याचा स्वतःवर अंमल होण्यास म्हणजे तें ज्ञान निरंतर अंगीं बाणण्यास हा अभ्यास बराच कालपर्यंत केला पाहिजे. इतका कीं, कोणत्याहि अवस्थेंत आपणास एकच हा निदिध्यास लागला पाहिजे. स्थितप्रज्ञता म्हणतात ती यालाच. '**मुक्तिस्तस्य ज्ञानात् तच्चाभ्यासात् स च स्थिरे देहे ।**' (र. हृ. १०, १०)

**शिष्यः**—श्रीशुकाचार्यांनीं हा अभ्यास कसा केला व त्यांना कोणता गुरु हा अभ्यास करविण्यास लाभला ?

**स्वामीः**—शुकाचार्य जरी उपजत ज्ञानी होते व त्यांचा जन्म होतांच ते सर्व टाकून नग्न स्थितींत पळूं लागले तथापि तेवढ्यानें

भागणार नाहीं हें जाणून त्यांचे वडील श्रीमहर्षि व्यास यांनीं त्या शुकाला ‘ अरे शुका, इकडे ये, तुला कांहीं उपदेश करावयाचा आहे ’ म्हणून हांक मारली. पण शुक वृत्तीवर नसल्यानें त्यास ऐकूंहि आलें नसावें व म्हणून ते निसूर पुढें चालूं लागले. शुकांची वृत्ति ज्ञानमय होती. त्यांच्यांत जगतांतील भेदभाव नव्हता. म्हणून बापानें पुनः कळवळ्यानें हांक मारतांच शुकाचें जरी तिकडे लक्ष गेलें नाहीं तरी सर्वजगत्स्वरूपी झालेल्या शुकानें म्हणजे आजू-बाजूच्या वृक्षलतादिकांनीं ‘ ओ, ओ ’ म्हणून व्यासांच्या हांकेस प्रत्युत्तरें दिलीं. शुक पुढें चाललाच होता. त्यानें परतूनसुद्धां मागें बघितलें नाहीं. हें पाहून श्रीव्यास इतकेंच मोठ्यानें ओरडून त्यास म्हणाले कीं, ‘ बरें तर, वत्सा, माझें न ऐकतां व मागें न फिरतां, पुढें जातोस तर जा, पण एक कर कीं, तूं जातांना विदेही जो जनक राजा त्यास एकवार भेटून जा, व त्यांचें तरी ऐक. ते तुला गुरु शोभण्यासारखे आहेत. तूं जरी जन्मतः ज्ञानी असलास तरी गुरुसेवेवांचून व त्यांच्या कृपेवांचून सर्व मोक्षमार्ग व्यर्थ आहे हें ध्यानांत असूं दे म्हणजे झालें ! याप्रमाणें येथून पुढील कथाभाग महाभारतांत शुकजनक संवादरूपानें आहेच. पण त्याचें पर्यवसान पुढें असें झालें कीं, शुकाचार्यांस गुरूपदेश घ्यावा लागून उपजत ज्ञान असतांहि दृढ अभ्यास करावा लागलाच. तोहि थोडा थोडका नसून बराच कालपर्यंत. यासाठीं त्यांनीं कडक तपश्चर्या आरंभून स्थितप्रज्ञता अंगीं बाणण्यास १०००० वर्षें समाधींत घालविलीं.

**शिष्यः**——आपण मला जो हा सद्गुरुमहिमा सांगितलात तो उत्तम रीतीनें कळला, व केवळ ज्ञान असूनहि तें अभ्यासावांचून निरर्थक हेंहि कळलें. पण अभ्यास करण्यास गुरूची आवश्यकता कां ? त्यांचे आज्ञेवांचून तो होऊं शकत नाहीं कीं काय ? अशी माझी सरळ शंका आहे.

**स्वामी**ः——गुरूची आवश्यकता आहेच. कां कीं, आपल्या मतें कोणतीहि गोष्ट कितीहि बरोबर असली तरी ती तज्ज्ञानें तपासल्याशिवाय खरी नव्हे. उदाहरणार्थ——एकाद्या चित्रकारानें कितीहि कसून एकाद्याचें चित्र रेखाटलें असलें तरी तें जोंपर्यंत दुसऱ्यानें पाहून ओळखतां आलें नाहीं तोंपर्यंत व्यर्थ. क्वचित् असेंहि होतें, चित्रकार तें चित्र रेखीत असतां त्यांत अगदीं तन्मय झालेला असतो, व त्यामुळें आपण केलें तें सर्वस्वीं बरोबर आहे अशी त्याची समजत असते. तथापि त्याचेप्रमाणें ही समजूत इतरांची होईल तेव्हां खरें. नाहींतर कावीळ झालेल्याला सर्व जग पिंवळें दिसत असतें म्हणून सर्व खरोखरीच तशा रंगाचें असतें काय ? नाहीं. हा केवळ त्या रोग्याचा पित्तदोष होय. तसेंच चित्रकाराचेंहि आहे. खुद्द चित्रकारहि आपली तन्मयता थोडा वेळ बाजूस ठेवून आपलें चित्र कांहीं काल मध्यें सोडून व कांहीं जागा सोडून मागें जाऊन पुनः आपली कृति नव्या दृष्टीनें पाहूं लागतो, त्यावेळीं त्याला आपल्या राहिलेल्या पूर्व चुक्या पुनः दिसूं लागतात. एरव्हीं नाहीं. इतकेंहि करून त्याचें चित्र अगदीं निर्दोष होतेंच अशी त्याची खात्री नसते म्हणून तर तो पुनः आपणांस सोडून इतरांस तें दाखवीत असतो,

त्याला स्वतःला जरी आपलें चित्र चांगलें झालें आहे म्हणून मनां-तून आनंद झालेला असतो, तरी जोंपर्यंत तज्ज्ञांनीं त्याची परीक्षा करून आपले अभिप्रायाचा शिक्का मारला नाहीं व तें चांगलें झालें असें म्हटलें नाहीं तोंपर्यंत व्यर्थच. पण एकदा का त्यांच्या पसंतीस पडलें म्हणजे चित्रकाराचाहि आनंद दुणावतो व त्यालाहि आपली कृति निर्दोष झाल्याचा आनंद वाटतो. हा अनुभव एकवार खुद्द चित्रकारासच विचारून पहा. हीच थेट स्थिति सर्व गोष्टीं-विषयींची आहे. नामदेवाला वाटलें कीं आपण पूर्ण भक्त तेव्हां आपण पोंचलों. पण जेव्हां सर्व संत मंडळी एकत्र बसलेली पाहून गोरा कुंभारांनीं सर्वांच्या टपलीं आपल्या हातांतील गाडगें घडवा-वयाचें थापटणें थोपटलें व हीं मानवरूपी गाडगीं कच्चीं कीं पक्कीं परीक्षा केली तेव्हां त्यांस आढळलें कीं नाम्या कच्चा! त्यांनीं मग नामदेवास सांगितलें कीं ‘ बाबारे, तूं अजून कच्चा आहेस, गुरु करून घे. त्यावांचून तुला सद्गतिहि नाहीं व सुटकाहि नाहीं. पुढें नाम-देवांनीं गुरूकडून आपला कार्यभाग साधला. म्हणून लक्षांत ठेवावें कीं, आपलें ज्ञान सर्वांगपरिपूर्ण होण्यास व तें चोख आहे असें समजण्यास त्याची परीक्षा दुसऱ्याकडून करून घ्यावी लागते व तेव्हांच तें दृढ होतें असें समजावें. गुरूची आवश्यकता कां आहे हें यावरून कळलेंच असेल, व्यवहारांतहि हें सोनें किती नंबरी आहे हें पाहण्याकरितां आपण सरकारी छापाच्या माणसाकडे अथवा सराफाकडे आपलें सोनें त्याचा कस, हीण इत्यादि तपासण्याकरितां जात नाहीं काय? तसेंच येथेंहि आहे. आपणास समजतें असें

वाटत असलें व तें एक वेळ खरेंहि असलें तरी त्यावर जगताचा छाप हा बसलाच पाहिजे. नंतर तें सर्वतोपरी सिद्ध झालें असें जाणावें. याप्रमाणें ही गुरूची आवश्यकता असतेच असते. नुसत्या जगाला विचारलें अथवा त्याकडे पाहून आपण थोडीहि गोष्ट उचलली व ती शिकलों तरीहि जग हें आपलें गुरुच झालें. श्री-दत्तांनींहि चोवीस गुरु असेच केले. यावरून आपणाव्यतिरिक्त जग गुरुस्थानीं नव्हे असें कसें म्हणतां येईल? आपण जगांत आहोंत तोंपर्यंत आपलें जगावांचून यत्किंचित्‌हि चालणार नाहीं. म्हणून अशा प्रसंगीं कोणी आपल्याला योग्य गुरु न मिळाला तर निदान जगद्गुरूस म्हणजे जगद्रूपी गुरूस शरण जाऊन आपला कार्यभाग साधावा. याचा अर्थ निदान जगापासून तरी ज्ञानाचे व अभ्यासाचे धडे घ्यावेत. जन्मतः माता गुरु, पुढें पिता गुरु, पुढें ज्ञान-दाता गुरु, पुढें जगद्गुरु व शेवटीं परमात्मा गुरु याप्रमाणें एकसारखी पायरी पायरीनें गुरुपरंपरा आहेच. मिळून काय सर्वत्र गुरुमयच आहे. म्हणून गुरूची योग्यता जी साक्षात् परब्रह्माइतकी म्हणून खालील श्लोकांत सांगितली आहे ती यासाठींच. '**गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरु-र्देवो महेश्वरः । गुरुः साक्षात् परब्रह्म तस्मै श्रीगुरवे नमः ॥** या श्लोकांत सर्वच गुरु म्हणून सांगितलें आहे तें एवढ्याचकरितां. याप्रमाणें गुरूचें माहात्म्य आहे.

**शिष्यः**—मला हें गुरुमाहात्म्य पक्कें ठसलें. आतां मी असें विचारतों कीं, तो गुरु आहे तरी कसा अथवा असतो तरी कसा हें कळेल काय?

**स्वामी**:—हो, आम्ही स्वतः आमच्या गुरुमहाराजांचे ठायीं जे गुण पाहिले आहेत ते तुम्हां सर्वांस ऐकून तरी माहीत असतीलच. नसल्यास त्यांचें एकवार श्रवण करा म्हणजे समजेल. अथवा याहिपेक्षां थोडक्यांत म्हणजे श्रीसद्गुरु श्रीमत् परमहंसपरिव्राजकाचार्य वासुदेवानन्दसरस्वती यांनीं केलेली ‘श्रीगुरुस्तुति’च एकवार पठण करा म्हणजे झालें. त्यांत ९ श्लोकांत सर्व कांहीं गुरूचे गुण आणलेले आहेत.

## श्रीगुरुस्तुति

जो सत्य आहे परिपूर्ण आत्मा। जो नित्य राहे उदित प्रभात्मा।
ज्ञानें जयाच्या नर हो कृतार्थ। तो पूर्ण आनंद गुरू समर्थ ॥ १ ॥
अखंड आत्मा अविनाशि दत्त। तया पदीं लाविति जे स्वचित्त।
वित्तभ्रमा सोडिति ते कृतार्थ। तो पूर्ण आनंद गुरू समर्थ ॥ २ ॥
जो जागृति स्वप्न सुषुप्तिसाक्षी। जो निर्विकारें सकलां निरीक्षी।
चीक्षी परी ज्यासि नसे निजार्थ। तो पूर्ण आनंद गुरु समर्थ ॥ ३ ॥
जळीं स्थळीं सर्वहि वस्तुमाजी। व्यापूनि राहेचि तयासि राजी।
जो ठेवि भावें नर हो कृतार्थ। तो पूर्ण आनंद गुरू समर्थ ॥ ४ ॥
जें दृश्य तें रूप नसे जयाचें। दृश्यांत राहे अविकारि ज्याचें।
स्वरूप तोची अविनाशि अर्थ। तो पूर्ण आनंद गुरू समर्थ ॥ ५ ॥
दृश्यासि घेतां नच घेववें जें। स्वरूप तत्स्थ प्रभुचें सुतेजें।
स्वयें प्रकाशे जगीं जो परार्थ। तो पूर्ण आनंद गुरु समर्थ ॥ ६ ॥
असोनि सर्वत्र गुरुप्रसादा। विना न लाभे करितांहि खेदा।
भेदाचि वार्ता करि जो अपार्थ। तो पूर्ण आनंद गुरु समर्थ ॥ ७ ॥

अनन्य भावें भजतां अनन्य। लभ्य प्रभु जो नच होइ अन्य।
संन्यस्त सर्वैषण तारणार्थ। तो पूर्ण आनंद गुरु समर्थ ॥ ८ ॥
मागे तुकाराम तयासि दत्त। दे वासुदेवा करुनी निमित्त।
हें स्तोत्र चिन्मात्रपदा समर्थ। द्याया हराया सकलाध्यनर्थ ॥ ९ ॥

गाणगापुरि अठराशें सत्तावीस शकामधीं।
उदेयेले स्तोत्र हेंचि आधि व्याधि हरो कुधी ॥१०॥

## गुरुस्तुतीचा भावार्थ

ब्रह्म व आत्मा यांचें ऐक्य, अभेद दाखविण्याकरितां आत्म्यास परमात्मा म्हटलेलें आहे. आत्मा हा ब्रह्माप्रमाणेंच अविनाशी व पूर्ण आहे. दत्त हे सद्गुरुही असेच आहेत. हा कूटस्थ ( निर्वि-कार ) परमात्मा जागृति, स्वप्न व सुषुप्ति या तिन्ही अवस्थांस व्यापून आहे व तसाच तो सर्व जगतासही व्यापून दशांगुळें उरला आहे. हा स्वतः अविकारी असून विकारांत सांपडण्याजोगा नाहीं. हा सर्वांना प्रकाशित करतो. पण त्याचा प्रकाश मात्र घेतां येत नाहीं. अशा या आत्म्याची प्राप्ति त्याची सद्गुरूप्रमाणें उपासना केल्यावांचून होत नाहीं. जसें दुधांत तूप असूनही तें दूध विरजून मंथन केल्यावांचून प्रकट होत नाहीं तद्वत्. परंतु हेंही कळण्यास गुरुकृपाच हवी व असा गुरु म्हणजेही परमात्माच; म्हणून अशा गुरूची अथवा दत्ताची म्हणजे अद्वैत ब्रह्माची एकभावानें उपासना केली असतां तो शेवटीं त्याचें फळ जें त्याशीं एकरूप होणें तें देतो. एकंदरींत एकानेंच एकाची एकभावानें सेवा केली असतां अखेरीस तें एकच ज्याचें त्यास प्रतीत होतें असा सिद्धान्त. म्हणून

परमात्मरूप दत्तानें वासुदेवाला निमित्त करून तुकारामाला दिलेलें हें स्तोत्र चिन्मात्र पदास नेण्यास म्हणजे आत्मप्रकाश करण्यास समर्थ आहे व त्याबरोबरच तें सर्व आधिव्याधि व कुधी (कुबुद्धि) म्हणजे अज्ञानापासून परावृत्त करून, ज्ञानमात्र केवल स्वरूप करण्यासही समर्थ आहे.

**शिष्य**:——मागें आपण ध्यानयोग साधल्याची खूण आत्म-साक्षात्कार म्हणून सांगितलीत तरी तो कशास म्हणावा?

**स्वामी**:——आत्मसाक्षात्काराचें स्पष्ट लक्षण गीतेंतच श्रीभग-वंतांनीं असें सांगितलें आहे. ते म्हणतात——'**यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।**' म्हणजे असा एक परमोत्कृष्ट लाभ कीं ज्याच्यावर असा दुसरा लाभच शिल्लक उरत नाहीं तो लाभ.

**शिष्य**:——म्हणजे परमोच्च लाभच कां म्हणाना कीं ज्याचे योगें वेदांतमताप्रमाणें निःश्रेयस प्राप्त होतें तो असेंच कीं नाहीं?

**स्वामी**:——होय, तसेंच म्हणण्यास हरकत नाहीं.

**शिष्य**:——बरें अशा लाभाचा हेतु काय? तो साधल्यापासून काय घडतें?

**स्वामी**:——ज्यास आत्मसाक्षात्कार होतो अशा आत्मसाक्षात्कारी पुरुषाचीं सर्व कर्मे मग निरहंकृतीनें होऊं लागतात, व तीं कर्मे मग ब्रह्मार्पण होतात. शिवाय एरवीं कामिक कर्मे करीत असतां त्यांत अहंकार असल्यामुळें त्या कर्मापासून इष्टानिष्ट गोष्टी घडल्या म्हणजे मन सुखदुःखांनीं बद्ध होतें व त्यामुळें जीवात्मा आपण कोण हें अगदींच विसरतो. त्याचा परिणाम तो भ्रमांत पडून

